पुत्रसहितेन मातृपितृश्रेयोऽर्थं श्रीवासुपूज्यबिंबं कारितं वृद्धतपापक्षे भ० श्रीजिनरत्नसूरिभिः प्रतिष्ठितं श्रीशुभं ॥

५१६. सं० १५४३ वर्षे वैशाषव० १० शुक्रे गूर्जरज्ञा०म० गोपालभा० झाईसु० म० संग्रामभा० रामतिनाम्न्या स्वश्रेयसे श्रीशीतलनाथबिंबं कारापितं आगमगच्छे श्रीजिनचंद्रसूरिभिः प्रतिष्ठितं गंधारमंदिरे ॥

५१७. संवत् १५२८ वर्षे पौषवदि ५ बुधे श्रीश्रीमालज्ञातीय श्रे० देवाभा० देऊसुतगणीयानीसलेन स्वपितृव्यसिवाभ्रातृषेताझीथानिमित्तं श्रीनमिनाथबिंबं कारापितं प्र० अंचलगच्छे श्रीजयकेसरिसूरिभिः श्रीरस्तु ॥

५१८. संवत् १३४६ (?)..............................श्रीपार्श्वनाथबिंबं कारितं प्र० श्रीललितदेवसूरीणामुपदेशेन ब्रह्माण....सूरिभिः॥

५१९. सं० १३७१ वर्षे माघशुदि १४ सोमे पितृसूमदेवपितृव्यतेजपाल पितामही रतनसिरि तथा मातृमेषू एतेषां श्रेयसे सुतमूलूधनपालपूनप्रभृति श्रीशांतिनाथबिंबं कारितं प्र० मलधारिश्रीतिलकसूरिभिः ॥

५२०. संवत् १२७९ माघशुदि २ गुरौ मातृठ० सुहागदेविश्रेयोऽर्थं परीक्षजयताकेन श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीचंद्रगच्छीयश्रीश्री[वीर]चां(चं)द्रसूरिभिः ॥

५२१. सं० १३८६ वैशाखवदि १० सोमे व्य० तेजपालभार्या...णदेविपुत्रआवडेन मातृश्रेयसे श्रीआदिनाथबिंबं का० प्र० श्री सूरिभिः ॥

५२२. सं० १४८० वर्षे वैशाखव० ७ शुक्रे प्राग्वाटज्ञा०

महं. पूनाभार्या पूरी सुतपाल्हाकेन मातृपितृश्रेयोऽर्थं श्रीसंभवनाथबिंबं कारि० प्र० श्रीगुणाकरसूरिभिः ॥

५२३. सं० १....९ कार्त्तिकवदि ४ शनौ श्रीमालज्ञातिपितृ-लोलाश्रेयोऽर्थं मातृवीसलदेविपूजार्थं सुतजगाकेन श्रीशांतिनाथबिंबं कारितं॥

५२४. सं० १४४६ वर्षे वैशाखवदि....उपकेशज्ञातीयव्य० छाडाभार्या किल्हणदे पितृमातृश्रेयसे सुतमेघासिंघाभ्यां श्रीआदिनाथबिंबं का० श्रीपू० श्रीदेवचंद्रसूरिप० श्रीपासचंद्रसूरि उपदेशेन ॥

५२५. संवत् १५३१ वर्षे ज्ये० शु० २ रवौ नागरज्ञातीय वृ० सं० बिंबचीयाणागोत्रे पा० हापाभार्याराजूसुतभलागोपालाभ्यां कुटुंबयुताभ्यां मातृश्रेयसे श्रीशांतिनाथबिंबं का० प्र० श्रीअंचलगच्छे श्रीजयकेसरिसूरिभिः वद्धनगरे ॥

५२६. सं० १४३८ वर्षे ज्येष्ठव० ४ शनौ प्राग्वाट० व्य० मोषट भा० सोमलदेपु० झांझणेन पित्रोः श्रेयसे श्रीधर्मनाथबिंबं का० प्र० श्री गुणसागरसूरिपट्टे श्रीमलयचंद्रसूरीणामुपदेशेन ॥

५२७. सं० १४(?)२६ वर्षे वैशाखशुदि १० रवौ श्रीमालज्ञा० .... ............................नाथबिंबं कारितं श्रीकमलचंद्रसूरीणा-मुपदेशेन ॥

५२८. संवत् १४१५ ज्येष्ठवदि १२ वायडज्ञा० पितृमंडलिक मातृमाल्हणदेश्रेयसे सुतवाघाकेन श्रीपार्श्वनाथबिंबं कारितं प्र० श्रीरा-सिल्लसूरिभिः ॥

# श्रीस्तंभतीर्थ ( खंभात ).

## श्रीचिन्तामणिपार्श्वनाथजिनालयप्रशस्तिः ।

॥ ६० ॥ ॐ ॥

५२९. श्रेय:संततिधामकामितमनःकामद्रुमांभोधरः
पार्श्वः प्रीतिपयोजिनीदिनमणिश्चिंतामणिः पातु वः ।
ज्योतिःपंक्तिरिवाब्जिनीप्रणयिनं पद्मोत्करोल्लासिनं
संपत्तिर्न जहाति यच्चरणयोः सेवां सृजन्तं जनं ॥ १ ॥

श्रीसिद्धार्थनरेशवंशसरसीजन्माब्जिनीवल्लभः
पायाद्वः परमप्रभावभवनं श्रीवर्द्धमानप्रभुः ।
उत्पत्तिस्थितिसंहृतिप्रकृतिवाग् यद्गीर्जगत्पावनी
स्वर्वापीव महाव्रतिप्रणयभूरासीद् रसोल्लासिनी ॥ २ ॥

आसीद्वासववृंदवंदितपदद्वंद्वः पदं संपदां
तत्पट्टांबुधिचंद्रमा गणधरः श्रीमान् सुधर्म्माभिधः ।
यस्यौदार्ययुता प्रहृष्टसुमना अद्यापि विद्यावती
धत्ते संततिरुन्नतिं भगवतो वीरप्रभोर्गौरिव ॥ ३ ॥

बभूवुः क्रमतस्तत्र श्रीजगच्चंद्रसूरयः ।
येस्तपाबिरुदं लेभे बाणसिद्ध्यर्क१२८५वत्सरे ॥ ४ ॥

क्रमेणास्मिन् गणे हेमविमलाः सूरयोऽभवन् ।
तत्पट्टे सूरयोऽभूवन्नानन्दविमलाभिधाः ॥ ५ ॥

साध्वाचारविधिपथः शिथिलतः सम्यक्श्रियां धाम यै–
रुद्दध्रे स्तनसिद्धिसायकसुधारोचिर्म्मिते १५८२ वत्सरे ।

जीमूतैरिव यैर्जगत्पुनरिदं तापं हरद्भिर्भृशं
सश्रीकं विदधे गवां शुचितमैः स्तोमै रसोल्लासिभिः ॥६॥

पञ्चाशयैरलमलंक्रियते स्म तेषां
प्रीणन्मनांसि जगतां कमलोदयेन ।
पट्टः प्रवाह इव निर्जरनिर्झरिण्याः
शुद्धात्मभिर्विजयदानमुनीशहंसैः ॥ ७ ॥

तत्पट्टपूर्वपर्वतपयोजिनीप्राणवल्लभप्रतिमाः ।
श्रीहीरविजयसूरिप्रभवः श्रीधाम शोभंते ॥ ८ ॥

ये श्रीफतेपुरं प्राप्ताः श्रीअकब्बरशाहिना ।
आहूता वत्सरे नंदानलर्त्तुशशिभृ१६३९ न्मिते ॥ ९ ॥

निजाशेषेषु देशेषु शाहिना तेन घोषितः ।
षाण्मासिको यदुक्त्योच्चैरमारिपटहः पटुः ॥ १० ॥

स श्रीशाहिः स्वकीयेषु मंडलेष्वखिलेष्वपि ।
मृतस्वं जीजिआख्यं च करं यद्वचनैर्जहौ ॥ ११ ॥

दुस्त्यजं तत्करं हित्वा तीर्थं शत्रुंजयाभिधं ।
जनसाद्यद्गिरा चक्रे क्ष्माशक्रेणामुना पुनः ॥ १२ ॥

ऋषी( षि )श्रीमेवजीमुख्या लुंपाकामतमात्मनः ।
हित्वा यच्चरणद्वंद्वं भेजुर्भृंगा इवांबुजं ॥ १३ ॥

तत्पट्टमब्धिमिव रम्यतमं सृजंतः
स्तोमैर्गवां सकलसंतमसं हरंतः ।
कामोल्लसत्कुवलयप्रणया जयंति
स्फूर्जत्कला विजयसेनमुनींद्रचंद्राः ॥ १४ ॥

यत्प्रतापस्य माहात्म्यं वर्ण्यते किमतः परं ।
अस्वमाश्चक्रिरे येन जीवंतोऽपि हि वादिनः ॥ १५ ॥

सुंदरादरमाहूतैः श्रीअकब्बरभूभुजा ।
द्राग् यैरलंकृतं लाभपुरं पद्ममित्रालिभिः ॥ १६ ॥

श्रीअकब्बरभूपस्य सभासीमंतिनीहृदि ।
यत्कीर्त्तिर्मौक्तिकीभूता वादिवृंदजयाब्धिजा ॥ १७ ॥

श्रीहीरविजयाह्वानसूरीणां शाहिना पुरा ।
अमारिमुख्यं यद्दत्तं यत्साक्षात्सकलं कृतं ॥ १८ ॥

अर्हंतं परमेश्वरत्वकलितं संस्थाप्य विश्वोत्तमं
साक्षात् शाहिअकब्बरस्य सदसि स्तोमैर्गवामुद्यतैः ।
यैः संमीलितलोचना विदधिरे प्रत्यक्षशूरैः श्रिया
वादोन्मादभृतो द्विजातिपतयो भट्टा निशाटा इव ॥ १९ ॥

सैरभी सौरभेयी च सौरभेयश्च सैरभः ।
न हंतव्या न च ग्राह्या बंदिनः केऽपि कर्हिचित् ॥ २० ॥

येषामेष विशेषोक्तिविलासः शाहिनामुना ।
ग्रीष्मतप्तभुवेवाब्दपयःपूरः प्रतिश्रुतः ॥ २१ ॥ युग्मम् ॥

जित्वा विप्रान् पुरः शाहेः कैलास इव मूर्त्तिमान् ।
यैरुदीच्यां यशःस्तंभः स्वो निचख्ने सुधोज्ज्वलः ॥ २२ ॥

इतश्च—

उच्चैरुच्छलिताभिरूर्मिततिभिर्वारांनिधेर्बंधुरे
श्रीगंधारपुरे पुरंदरपुरप्रख्ये श्रिया सुंदरे ।
श्रीश्रीमालिकुले शशांकविमले पुण्यात्मनामग्रणी-
रासीदाल्हणसी परीक्षकमणिर्नित्यास्पदं संपदां ॥ २३ ॥

आसीद्देल्हणसीति तस्य तनुजो जज्ञे धनस्तत्सुत-
स्तस्योदारमनाः सनामुहलसीसंज्ञोऽभवन्नंदनः ।

तस्याभूत् समराभिधश्च तनयस्तस्यापि पुत्रोऽर्ज्जुन–
स्तस्यासीत्तनयो नयोर्ज्जितमतिर्भीमाभिधानः सुधीः ॥२४॥

लालूरित्यजनिष्ट तस्य गृहिणी पद्मेव पद्मापते–
रिभ्योऽभूत्तनयोऽनयोश्च जसिआसंज्ञः सुपर्वप्रियः ।
पौलोमीसुरराजयोरिव जयः पित्रोर्मनःप्रीतिकृद्
विष्णोः सिंधुसुतेव तस्य जसमादेवीति भार्याऽभवत् ॥२५॥

सद्धर्म्मं सृजतोस्तयोः प्रतिदिनं पुत्रावभूतामुभा–
वस्त्येको वजिआभिधः सदभिधोऽन्यो राजिआह्वः सुधीः ।
पित्रोः प्रेमपरायणौ सुमनसां वृंदेषु वृंदारकौ
शर्व्वाणीस्मरवैरिणोरिव महासेनैकदंताविमौ ॥ २६ ॥

आद्यस्य विमलादेवी देवीव सुभगाकृतिः ।
परस्य कमलादेवी कमलेव मनोहरा ॥ २७ ॥

इत्यभूतामुभे भार्य्ये द्वयोर्बांधवयोस्तयोः ।
ज्यायसो मेघजीत्यासीत् सूनुः कामो हरेरिव ॥२८॥ युग्मम् ॥

सुस्निग्धौ मधुमन्मथाविव मिथो दस्राविव प्रोल्लसद्–
रूपौ ख्यातिभृतौ धनाधिपसतीनाथाविव प्रत्यहं ।
अन्येद्युर्वृहदिभ्यसभ्यसुभगं श्रीस्तंभतीर्थं पुरं
प्राप्तौ पुण्यपरंपराप्रणयिनौ तौ द्वावपि भ्रातरौ ॥ २९ ॥

तत्र तौ धर्म्मकर्म्माणि कुर्व्वाणौ स्वभुजार्जितां ।
श्रियं फलवतीं कृत्वा प्रसिद्धिं प्रापतुः परां ॥ ३० ॥

काश्चिल्लदिक्पतिरकब्बरसार्वभौमः
स्वामी पुनः परतकालनृपः पयोधेः ।

कामं तयोरपि पुरः प्रथिताविमौ स्त-
स्तत्तद्दिशोरसदृशोरनयोः प्रसिद्धिः ॥ ३१ ॥

तेषां च हीरविजयव्रतिसिंधुराणां
तेषां पुनर्विजयसेनमुनीश्वराणां ।
वाग्भिर्मुधाकृतसुधाभिरिमौ सहोदरौ
द्राग् द्वावपि प्रमुदितौ सुकृते बभूवतुः ॥ ३२ ॥

श्रीपार्श्वनाथस्य च वर्द्धमान-
प्रभोः प्रतिष्ठां जगतामभिष्टां ।
घनैर्धनैः कारयतः स्म बंधू तौ
वार्द्धिपाथोधिकलामितेऽब्दे १६४४ ॥ ३३ ॥

श्रीविजयसेनसूरिर्निर्म्ममे निर्म्ममेश्वरः ।
इमां प्रतिष्ठां श्रीसंघकैरवाकरकौमुदीं ॥ ३४ ॥

चिंतामणेरिवात्यर्थं चिंतितार्थविधायिनः ।
नामास्य पार्श्वनाथस्य श्रीचिंतामणिरित्यभूत् ॥ ३५ ॥

अंगुलैरेकचत्वारिंशता चिंतामणेः प्रभोः ।
संमिता शोभते मूर्त्तिरेषा शेषाहिसेविता ॥ ३६ ॥

सदैव विध्यापयितुं प्रचंड-
भयप्रदीपानिव सप्तसर्प्पान् ।
योऽवस्थितः सप्त फणान् दधानो
विभाति चिंतामणिपार्श्वनाथः ॥ ३७ ॥

लोकेषु सप्तस्वपि सुप्रकाशं
किं दीप्रदीपा युगपद्विधातुं ।
रेजुः फणाः सप्त यदीयमूर्ध्नि
मणित्विषा ध्वस्ततमःसमूहाः ॥ ३८ ॥

सहोदराभ्यां सुकृतादराभ्या-
माभ्यामिदं दत्तबहुप्रमोदं ।
व्यधायि चिंतामणिपार्श्वचैत्य-
मपत्यमुर्व्वीधरभित्समायाः ॥ ३९ ॥

निःकामं कामितं कामं दत्ते कल्पलतेव यत् ।
चैत्यं कामदनामैतत् सुचिरं श्रियमश्नुतां ॥ ४० ॥

उत्तंभा द्वादश स्तंभा भांति यत्रार्हतो गृहे ।
प्रभूपास्त्यै किमभ्येयुः स्तंभरूपभृतोऽशवः ॥ ४१ ॥

यत्र प्रदत्तदृक्शैत्ये चैत्ये द्वाराणि भांति षट् ।
षण्णां प्राणभृतां रक्षार्थिनां मार्गा इवागतेः ॥ ४२ ॥

शोभंते देवकुलिकाः सप्त चैत्येऽत्र शोभनाः ।
सप्तर्षीणां प्रभूपास्त्यै सद्विमाना इवेयुषां ॥ ४३ ॥

द्वौ द्वारपालौ यत्रोच्चैः शोभेते जिनवेश्मनि ।
सौधर्म्मेशानयोः पार्श्वसेवार्थं किमितौ पती ॥ ४४ ॥

पंचविंशतिरुत्तुंगा भांति मंगलमूर्त्तयः ।
प्रभुपार्श्वे स्थिताः पंचव्रतानां भावना इव ॥ ४५ ॥

भृशं भूमिगृहं भाति यत्र चैत्ये महत्तरं ।
किं चैत्यश्रीदिदृक्षार्थमितं भवनमासुरं ॥ ४६ ॥

यत्र भूमिगृहे भाति सौपानी पंचविंशतिः ।
मार्गालिरिव दुरितक्रियातिक्रांतिहेतवे ॥ ४७ ॥

संमुखो भाति सोपानोत्तारद्वारि द्विपाननः ।
अंतः प्रविशतां विघ्नविध्वंसाय किमीयिवान् ॥ ४८ ॥

यद् भाति दशहस्तोच्चं चतुरस्त्रं महीगृहं ।
दशदिक्संपदां स्वैरोपवेशायेव मंडपः ॥ ४९ ॥

षड्विंशतिर्विबुधवृंदवितीर्णहर्षा
राजंति देवकुलिका इह भूमिधाम्नि ।
आद्यद्वितीयदिवनाथरवींदुदेव्यः
श्रीवाग्युताः प्रभुनमस्कृतये किमेताः ॥ ९० ॥

द्वाराणि सुप्रपंचानि पंच भांतीह भूगृहे ।
जिघत्सवोऽहोहरिणान् धर्म्मसिंहमुखा इव ॥ ९१ ॥

द्वौ द्वास्थौ द्वारदेशस्थौ राजतो भूमिधामनि ।
मूर्तिमंतौ चमरेंद्रधरणेंद्राविव स्थितौ ॥ ९२ ॥

चत्वारश्चमरधरा राजंते यत्र भूगृहे ।
प्रभुपार्श्वे समायाता धर्म्मास्त्यागादयः किमु ॥ ९३ ॥

भाति भूमिगृहे मूलगर्भागारेऽतिसुंदरे ।
मूर्तिरादिप्रभोः सप्तत्रिंशदंगुलसंमिता ॥ ९४ ॥

श्रीवीरस्य त्रयस्त्रिंशदंगुला मूर्तिरुत्तमा ।
श्रीशांतेश्च सप्तविंशत्यंगुला भाति भूगृहे ॥ ९५ ॥

यत्रोद्धता धराधाम्नि शोभंते दश दंतिनः ।
युगपज्जिनसेवायै दिशामीशा इवाययुः ॥ ९६ ॥

यत्र भूमिगृहे भांति स्पष्टमष्ट मृगारयः ।
भक्तिभाजामष्टकर्म्मगजान् हंतुमिवोत्सुकाः ॥ ९७ ॥

श्रीस्तंभतीर्थपूर्भूमिभामिनीभालभूषणं ।
चैत्यं चिंतामणेर्वीक्ष्य विस्मयः कस्य नाभवत् ॥ ९८ ॥

एतौ नितांतमतनुं तनुतः प्रकाशं
यावत् स्वयं सुमनसां पथि पुष्पदंतौ ।

श्रीस्तंभतीर्थधरणीरमणीललाम
तावच्चिरं जयति चैत्यमिदं मनोज्ञं ॥ ५९ ॥

श्रीलाभविजयपंडिततिलकैः समशोधि बुद्धिधनधुर्यैः ।
लिखिता च कीर्त्तिविजयाभिधेन गुरुबांधवेन मुदा ॥ ६० ॥

वर्ण्णिनीव गुणाकीर्णा सदलंकृतिवृत्तिभाग् ।
एषा प्रशस्तिरुत्कीर्णा श्रीधरेण सुशिल्पिना ॥ ६१ ॥

श्रीकमलविजयकोविदशिशुना विबुधेन हेमविजयेन ।
रचिता प्रशस्तिरेषा कनीव सदलंकृतिज्जयति ॥ ६२ ॥

इति परीक्षकप्रधानप० वजिआप० राजिआनामसहोदरनिर्म्मापित-श्रीचिंतामणिपार्श्वजिनपुंगवप्रासादप्रशस्तिः संपूर्णा । भद्रं भूयात् ॥

ॐ नमः । श्रीमद्विक्रमनृपातीतसंवत् १६४४ वर्षे प्रवर्त्तमान-शाके १५०९ गंधारीयप० जसिआ तद्भार्या जसमादे संप्रति श्रीस्तंभ-तीर्थवास्तव्यतत्पुत्रप० वजिआप० राजिआभ्यां वृद्धभ्रातृभार्या विमलादे लघुभ्रातृभार्या कमलादे वृद्धभ्रातृपुत्रमेघजी तद्भार्या मयगलदेप्रमुखनिज-परिवारयुताभ्यां श्रीचिंतामणिपार्श्वनाथश्रीमहावीरप्रतिष्ठा कारिता श्रीचिं-तामणिपार्श्वचैत्यं च कारितं । कृता च प्रतिष्ठा सकलमंडलाखंडलशाहि-श्रीअकब्बरसन्मानितश्रीहीरविजयसूरीशपट्टालंकारहारसदृशैः शाहिश्री-अकब्बरपर्षदि प्राप्तवर्ण्णवादैः श्रीविजयसेनसूरिभिः ॥

## श्रीचिन्तामणिपार्श्वनाथजिनालयना लेखो.

५३०. सं० १५०९ वर्षे मार्गशीर्षशुदि ६ दिने ऊकेशवंशे श्रे० सीहाभार्यासलषूपुत्रेण श्रेष्ठिमहिराजेन निजमातृपुण्यार्थं श्रीसुमति-नाथबिंबं कारितं प्रतिष्ठितं श्रीखरतरगच्छे श्रीजिनराजसूरिपट्टेशश्रीजिन-भद्रसूरियुगप्रवरागमैः ॥

५३१. सं० १३८० वर्षे माहशुदि ६ सोमे श्रीउपकेशगच्छे वेसटगोत्रे सा० गोसलान्य० जेसंगभा० आसधरश्रे० भ्रातृसंघ० श्रा० देसल तत्पुत्रसा० सहजपालसा० साहणसा० समरसिंहपितृव्यसा० लूणा तत्पुत्रसा० सागतसांगणप्रमुखैश्चतुर्विंशतिपट्टः का० प्र० श्रीककुदाचार्यसं० श्रीककसूरिभिः ॥

५३२. सं० १४१० वर्षे माघवदि ६ बुधे..........मरसीहेन स्वपितुः सा०..........र्थं श्रीशांतिनाथबिंबं कारितं प्रतिष्ठितं श्रीपद-(?)मसूरिसंताने श्रीराजगच्छे श्रीहरिभद्रसूरिभिः ॥

५३३. सं. १५२२ वर्षे फागणशुदि ३ सोमे श्रीश्रीमालज्ञा-तीयसा० हलाभा० रंगाईसु०सा० सदासा० वस्तासा० मदनाख्या सा० सदाभा० धर्माईनाम्न्या सु० मलादिकुटुंबयुतया स्वश्रेयसे श्रीआदिनाथ-बिंबं का० प्र० श्रीपूर्णिमापक्षे श्रीपुण्यरत्नसूरीणामुपदेशेन प्र० विधिना श्रीस्तंभतीर्थे ॥

५३४. सं. १५६८ वर्षे ज्येष्ठवदि ८ रवौ उपकेशज्ञातौ चीचटगोत्रे देसलशाखायां सा० सूरपालभा० रामतिपु० सा० सधारणेन भा० पदमाईपु० सहसकिरणसमरसीसहितेन बाईपारबतीपुण्यार्थं श्रीअ-रनाथबिंबं कारितं प्रतिष्ठितं श्रीउपकेशगच्छे भ० श्रीदेवगुप्तसूरिपट्टे भ० श्रीसिद्धसूरिभिः ॥

५३५. संवत् १५१७ वर्षे फागणशुदि ३ शुक्रे श्रीभावडह(र) गच्छे श्रीश्रीमालीयज्ञातीयमं० हांसाभा० हीराईपु० जिणदत्तदेवसीह स्वकुटुंबेन निजपूर्वजनिमित्तं स्वश्रेयसे श्रीसुमतिनाथबिंबं कारितं. प्रति० श्रीकालिकाचार्यसंतानीयश्रीभावदेवसूरिभिः स्तंभतीर्थे ॥

५३६. सं० १४९५ वर्षे माघवदि ८ शनौ श्रीश्रीमालज्ञातीय

श्रे० षेताभा० षेतलदेसु० पांचाकेन पितृमातृभ्रातृपासापरबतघूलाश्रेयोऽर्थं श्रीसंभवनाथबिंबं का० प्र० श्रीपिप्पलगच्छे श्रीश्रीउदयदेवसूरिभिः ॥

९३७. संवत् १५०७ वर्षे माघशु० १३ शुक्रे श्रीश्रीमालज्ञातीयश्रे० जाल्हाभार्या वाऊनाम्न्या तया भर्तुः श्रेयसे श्रीश्रेयांसनाथबिंबं आगमगच्छे श्रीहेमरत्नसूरिगुरूणामुपदेशेन कारितं प्रतिष्ठितं कारीयाणीवास्तव्यः ॥

९३८. सं० १५१३ वर्षे माघवदि २ शुक्रे श्रीश्रीमालज्ञातीय गां० देवराजभा० देवलदेसु० गां० गहिगाकेन भा० गुरदेसु० युगपालसहितेन पितृमातृश्रेयसे श्रीधर्मनाथबिंबं का० प्र० तपागच्छे श्रीरत्नसिंहसूरिभिः रजोडाग्रामे ॥

९३९. संवत् १६४४ वर्षे ज्येष्ठशुदि १२ सोमे श्रीगंधारवास्तव्यश्रीश्रीमालज्ञातीयवृद्धशाखायां परी० जसीआभा० जसमदेसु० परी० राजीआभा० ललनादेकारितं श्रीसुमतिनाथबिंबं प्रतिष्ठितं च श्रीतपागच्छाधिराजजगद्गुरुबिरुदधारिविजयमानश्री५श्रीहीरविजयसूरिपट्टालंकारश्रीविजयसेनसूरिभिः शुभं भवतु ॥

९४०. सं० १५१९ वर्षे वैशाखवदि ११ शुक्रे ओसवालज्ञातीयसं० चापापु० सं० सारंगपु० सं० आसधरभा० वीरूपु० संघवी गाइआभार्यानाईमाणिकदेव्या श्रीसुविधिनाथबिंबं कारितं प्रतिष्ठितं श्रीसंडेरगच्छे भ० श्रीशांतिसूरिपट्टे श्रीश्रीईश्वरसूरिभिः ॥

९४१. सं० १४२२ वैशाखसु. ११ बुधे श्रीउपकेशग.... ................................प्र० श्रीककुदाचार्यसंताने श्रीदेवगुप्तसूरिभिः ॥

९४२. सं० १५२९ वर्षे आसाढशुदि....आणंदग्रामवासिवायडज्ञातिश्रे० गोव्रलभा० माल्हणदे कउतिगदे पुत्र देवदासपुत्रजना हरषा

रत्ना । हरदासभ्रातृमहिराजेन भा० वल्हादेभ्रातृसागा पुत्री सोहीगोई कुटुंबयुतेन निजश्रेयसे श्रीपद्मप्रभबिंबं का० प्र० श्रीसोमसुंदरसूरिसंताने श्रीलक्ष्मीसागरसूरिभिः ॥

९४३. सं० १३९६ ज्येष्ठवदि ८ शनौ श्रीश्रीमालज्ञातीय श्रेष्ठिमहिपाल श्रे० लाषूश्रेयोऽर्थं श्रे०....हनागसीहाभ्यां श्रीश्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीसूरिभिः ॥

९४४. संवत् १६१२ वर्षे वैशाखशु० बीजिदिने श्रीजंबुसरग्रामे श्रीप्राग्वाटज्ञातीयवृद्धराजनै बाई दूना तस्य सुताबा० चंगाईपुत्रवु० वेगडकारितं श्रीचंद्रप्रभबिंबं श्रीविजयदानसूरिप्रतिष्ठितं शुभं भवतु ॥

९४५. संवत् १५६६ वर्षे....शु० ५ सोमे श्रीस्तंभतीर्थवासि मं० मूलाभा० मणकाईसु० मं० विद्याधरभार्या व्य० राजाभा० नाथीपुत्री पुराई तया सु० मंका मं० नारसिंघ मं० श्रीदत्तप्रमुखकुटुंबसहितया स्वमातृश्रेयोऽर्थं श्रीअजितनाथबिंबं कारितं प्रतिष्ठितं श्रीवृ०शाखायां भ० श्रीपूज्यश्रीधर्मरत्नसूरिभिः ॥

९४६. संवत १६४३ वर्षे ज्येष्ठशुदि २ सोमे श्रीवटपद्रवास्तव्य श्रीश्रीमालज्ञातीयसा० गोराभार्या जमनादेसुतसा० वस्ताभार्या विमलादेसुतसा० पंचायणनाम्ना पुत्रदेवाप्रमुखस्वकुटुंबयुतेन श्रीपार्श्वनाथबिंबं कारापितं श्रीमत्तपागच्छाधिराजजगद्गुरुभट्टारकप्रभुश्री५श्रीहीरविजयसूरि आचार्यश्रीविजयसेनसूरिभिः प्रतिष्ठितं ॥

९४७. सं० १२९८ ज्येष्ठशुदि ९ ठ० जोलाकेन पितृठ० वीजडश्रेयोऽर्थं श्रीनेमिनाथबिंबं कारितं प्रतिष्ठितं श्रीदेवप्रभसूरिभिः ॥

९४८. सं० १३०७ वर्षे वैशाखवदि ११ नाहरगोत्रे सा० जगपालभा० जयतलदेविपुत्रवीकमभार्या विजयदेविपुत्रहरपाल ..............खणसी......................सुत डासागण..........ण्याकैः

पितृमातृश्रे० श्रीआदिनाथ[:]कारितः प्र० श्रीधर्मघोषसूरिपट्टे श्रीअमरचंद्रसूरिशिष्यश्रीज्ञानचंद्रसूरिभिः ॥

९४९. सं० १३०९ वर्षे चैत्रवदि ९ गुरू थारापद्रीयगच्छे श्रे० चावाभार्यापद्मलश्रेयसे विंबं का० प्र० श्रीमदनचंद्रसूरिभिः ॥

९५०. सं० १५०२ वर्षे माघशुदि ६ गुरौ श्रीसंडेरगच्छे श्रीयशोभद्रसूरिसंताने डु० श्रे० पदमप० लीबाभा० लीलादे प०.... साताभा० जसमाई प० रयणीयरभा० श्रीकरणन्या सापानिमित्तं आत्मश्रेयसे श्रीकुंथुनाथबिंबं का० प्र० श्रीशांतिसूरिभिः ॥

९५१. सं० १३८७ वर्षे माहशुदि १०...........श्रीगूर्जरज्ञातीयठ० दूबासुतठ० वरणिगेन पितृव्य........................ श्रीअजितनाथस्वामिबिंबं कारितं प्रतिष्ठितं श्रीसूरिभिः ॥

९५२. ................................................................ ..............का० प्र० श्रीविबुधप्रभसूरिभिः पिप्पलाचार्यगच्छे ॥

९५३. सं० १५४७ व० वैशाखशु० ३ सोमे गंधारवासिप्राग्वाटज्ञा० सा० महिराजभा० रूडीपु० सं० पासवीरकेन भा० पूरी स्वकुटुंबयुतेन अंबिकामूर्त्ति[:] का० प्र० श्रीसुमतिसाधुसूरिभिः ॥

९५४. संवत् १३२८ वैशाखशु० ७ सो० व० चाचासीलूपुत्र्या हीरीश्राविकया आत्मश्रेयोऽर्थं श्रीनेमिबिंबं कारितं प्र० श्रीशिष्यश्रीवर्द्धमानसूरिभिः ॥

९५५. संवत् १२७५ ज्येष्ठशुदि १३ भौमे श्रे० साढापुत्रहरिश्चंद्रेण स्वश्रेयोऽर्थं श्रीआदिनाथबिंबं कारितं प्रतिष्ठितं वृहद्गच्छीयश्रीहरिभद्रसूरिशिष्यैः श्रीधनेश्वरसूरिभिः ॥

९५६. सं० १४७१ वर्षे माघशुदि १० शनौ श्रीमालीसा०

आसधरभा० तिलूपुत्रेण सा० हांसाकेन पितुः श्रेयसे श्रीअंचलगच्छे श्रीमहीतिलकसूरीणामुपदेशेन श्रीअजितनाथबिंबं कारितं प्रतिष्ठितं च ॥

५५७. संवत् १५२४ वर्षे चैत्रवदि ५ भूमे श्रीश्रीमालीज्ञा० श्रे० डूंगरभा० देल्हणदेसु० सुमण मांडणयुतेन नमिप्र० कारापि० पूर्णि० प्र० श्रीगुणसुंदरसूरिणा ॥

५५८. सं० १४९७ वर्षे ज्येष्ठशुदि २ सोमे श्रीश्रीमालज्ञातीयव्य० झांझणभार्या रूडीपुत्रव्य० पुत्रामल पितृमातृश्रेयोऽर्थं श्रीश्रीसंभवनाथबिंबं कारापितं प्रतिष्ठितं नागेंद्रगच्छे श्रीपद्माणंदसूरिभिः ॥

५५९. संवत् १५२५ वर्षे फागुणशुदि ९ सोमे श्रीश्रीमालज्ञातीयठ० सुगालभा० मदीसु० चांपाकस्य स्वभर्त्तुः निमित्तं आत्मश्रेयसे भा० लीला तया श्रीनमिनाथपंचतीर्थीश्रीजीवितस्वामिबिंबं कारितं प्रति० पिप्पलगच्छे श्रीगुणरत्नसूरिभिः । मंडुआनगरे ॥

५६०. संवत् १४६८ वर्षे आषाढशुदि ३ रवौ उपकेशज्ञातौ वेसटान्वये चिंचटगोत्रे सा० श्रीदेसलसुतसाधुश्रीसमरसिंहनंदनसा० श्रीसज्जनसिंहसुतसा० श्रीसगरेण पितृमातृश्रेयसे श्रीआदिनाथप्रमुखचतुर्विंशतिजिनपट्टकः कारितः श्रीउपकेशगच्छे श्रीककुदाचार्यसंताने प्रतिष्ठितं श्रीदेवगुप्तसूरिभिः ॥

५६१. संवत् १७०६ वर्षे ज्येष्ठवदि ३ गुरौ श्रीस्तंभतीर्थवास्तव्यश्रीश्रीमालीज्ञातीयवृद्धशाखीयगां० सूराभा० ना० लीलाई सुतया दो । यादसुतदो । जीवराजभार्या राजबाईपुत्रस्य परी । वजिआराजिआह्वानां भागिनेयस्य पालितपुत्रस्य च सकलश्रावकगुणमणिभूषितगात्रस्य नानाविधधर्मकार्यसमर्थनोद्भूतकीर्त्तिसुधारसपात्रस्य नेमिदासस्य वनितया दानगुणनिर्जितनिर्जरलतया सुकृतिकृतिस्तवनीयसम्यक्त्वशीलशोभितया श्रा० नारिंगदेनाम्न्या श्रीनारिंगपुराख्यश्रीपार्श्वनाथबिंबं कारितं

प्रतिष्ठितं च तत्त्व(? त्सुत)कारितप्रति(ष्ठा)यां तपागच्छाधि(धी)शपात-साहिश्रीमदकब्बरप्रदत्तजगद्गुरुबिरुदधारकभट्टा० श्रीहीरविजयसूरिपट्टा-लंकारभ० श्रीविजयसेनसूरिपट्टोद्योतकभ० श्रीविजयतिलकसूरिपट्टांबर-भास्करैर्भट्टा० श्रीविजयाणंदसूरीश्वरैः आचार्यश्रीविजयराजसूरिराजपरि-करितैः .................................... ॥ आचंद्रार्कं नंदतादिदं श्रीधरणेंद्रश्रीपद्मावतीदेवीसान्निध्यात् ॥

५६२. संवत् १६३२ वर्षे वैशाखशुदि १३ शुक्रे श्रीस्तंभतीर्थे श्रीहीरविजयसूरिप्रसादात श्रीसंघेन श्रीपंचासरापार्श्वनाथेति नाम बिंबं कारापितं श्रीमत्तपागच्छेशश्रीहीरविजयसूरिभिः आचार्यश्रीविजयसेनसू-रिभिः सह प्रतिष्ठितं समस्तश्रीसंघस्य भद्रं भवतु ॥

५६३. संवत् इलाही ४६ वर्षे संवत् १६५८ वर्षे माघसित ५ सोमे श्रीस्तंभतीर्थवास्तव्यश्रीश्रीमालीज्ञातीयप० वजिआराजिआभ्यां स्वश्रेयसे श्रीस्तंभनकपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीतपागच्छे महानृप-प्रतिबोधकसुविहितभ० श्रीहीरविजयसूरितत्पट्टोद्योतकारकभट्टारकश्री५ श्रीविजयसेनसूरिभिः आचार्यश्री ५ श्रीविजयदेवसूरिउ० श्रीविमल-हर्षग० उ० श्रीकल्याणविजयग० उ० श्रीसोमविजयग० प्रमुखपरिवार-परिकरितैः ॥

५६४. श्रीमन्नृपविक्रमसमयातीतसंवत् १४९१ आसाढादि ९२ वर्षे शाके १३५७ प्रवर्त्तमाने मार्गशीर्षशुक्लत्रयोदश्यां १३ तिथौ शनिवारे कृत्तिकायां घडी २८ अपरांतरोहिणीनक्षत्रे सिद्धियोगे रात्रि-घ० १२ समये सिंहलग्ने वहमानेऽस्यां शुभग्रहावलोकितकल्याणवतीवे-लायां श्रीराजगच्छे श्रीराजप्रभुगुरुसंताने श्रीहेमप्रभसूरिसंताने श्रीहरिप्रभ-सूरिपट्टे श्रीभट्टारकसंताने श्रीमेरुचंद्रसूरिजीवितस्वामिमूर्त्तिः ॥ चिरं जयतु शुभं भवतु ॥ (जमणी बाजू) श्रीमलयचंद्रसूरिमूर्तिरियं ॥ (डाबी बाजू) श्रीमुनितिलकसूरिमूर्तिरियं ॥

## आरीपाडो, श्रीशान्तिनाथजिनालय.

५६५. संवत् १५९१ वर्षे वै० वदि ६ शुक्रे श्रीगंधारवास्तव्यप्राग्वाटज्ञातीयसा० लषाभार्यया व्य० परबतपुत्र्या श्रा० झकूनाम्न्या सुतधर्मसिंहअमीचंद्रप्रमुखकुटुंबयुतया श्रीअनंतनाथबिंबं श्रीअंचलगच्छे श्रीगुणनिधानसूरीणामुपदेशतः कारितं प्रतिष्ठितं चिरं नंदतु ॥

५६६. संवत् १७६४ वर्षे ज्येष्ठशुदि ५ गुरौ स्तंभतीर्थबंदिरवास्तव्यप्राग्वाटज्ञातीयवृद्धशाखीयव० मेघराजभा० तेजकूअरिसुत भूलाकेन श्रीपार्श्वनाथपंचतीर्थी कारापिता प्रतिष्ठिता तपागच्छे भ० श्रीज्ञानविमलसूरिभिः ॥

५६७. संवत् १७६४ वर्षे ज्येष्ठशुदि ५ गुरौ श्रीस्तंभतीर्थबंदिरवास्तव्यप्राग्वाटज्ञातीयवृद्धशाखीयव० मेघराजभा० तेजकूवरिसुतभूलाकेन स्वद्रव्येण श्रीशांतिनाथपंचतीर्थी कारापिता प्रतिष्ठिता श्रीतपागच्छे भ० श्रीविजयप्रभसूरिपट्टे संविज्ञपक्षीयभ० श्रीज्ञानविमलसूरिभिः ॥

५६८. सं० १५२३ वर्षे वैशाखवदि ११ दिने गुरुवारे बोरसिद्धिवास्तव्यश्रीश्रीमाळज्ञातीयसोनीसगरभा०बा० सहिजलदेपु० ४ सो० गोल्हणगोविंदगोपासासिंघाभा० पूतलि पु०१जसाकेन स्वपितृश्रेयोऽर्थं श्रीशांतिनाथबिंबं कारापितं प्र० श्री० पू० प्र० भट्टा० श्रीगुणसुंदरसूरीणामुपदेशेन प्र० विधिना श्राद्धैः ॥

५६९. संवत् १७६४ वर्षे ज्येष्ठशुदि ५ गुरौ श्रीस्तंभतीर्थबंदिरवास्तव्यप्राग्वाटज्ञातीयवृद्धशाखीयदो० मेघराजभा० तेजकूअरिसुतभूलाकेन स्वद्रव्येण श्रीआदिनाथपंचतीर्थीबिंबं कारापितं प्रतिष्ठितं च तपागच्छभ० श्रीविजयप्रभसूरिपट्टे संविज्ञपक्षीयभ० श्रीज्ञानविमलसूरिभिः ॥

९७०. संवत् १७६४ वर्षे ज्येष्ठशुदि ९ गुरौ श्रीस्तंभतीर्थबंदिरवास्तव्यप्राग्वाटज्ञातीयवृद्धशाखीयदो० मेघराजभा०तेजकुअरिसुत भूलाकेन स्वद्रव्येण श्रीअजितनाथपंचतीर्थीबिंबं कारापितं प्रतिष्ठितं च तपागच्छभ० श्रीविजयप्रभसूरिपट्टे संविज्ञपक्षीयभ० श्रीज्ञानविमलसूरिभिः ॥

९७१. संवत् १५६९ वर्षे वैशाखशुदि ३ रवौ वटपद्रवासि प्राग्वाटज्ञातिसा० गजाभार्याजीविणिसुतसा०लषाकेन पितृष्वसाश्रा० देमाश्रेयोऽर्थं श्रीसंभवनाथबिंबं का० तपागच्छे श्रीहेमविमलसूरिभिः प्रतिष्ठितं ॥

९७२. संवत् १६०४ वर्षे वैशाख ७ सोमे श्रीपोरवाडज्ञातिवु० वीरजीभार्याबा० गौरीपुत्रजेराजजिवण श्रीधरमनाथबिंबं........ ............नसूरिभिः ॥

९७३. संवत् १६३७ वर्षे वैशाखशुदि १२ रवौ श्रीस्तंभतीर्थवास्तव्यश्रीनागरज्ञातीयसा० पताभार्या लीलादे सुतसा० हांसाभार्या हांसलदेनाम्न्या श्रीआदिनाथपंचतीर्थी कारापिता श्रीमत्तपागच्छे भट्टारकप्रभुश्रीहीरविजयसूरिभिः प्रतिष्ठिता शुभं भवतु ॥

९७४. संवत् १५०७ वर्षे फागणव० ५ प्राग्वाटज्ञातीयश्रे० कडूआभार्याकमलदेसुतइनाकेन भार्याआल्हणदे सुता राजू कुटुंबयुतेन स्वश्रेयोऽर्थं श्रीकुंथुनाथचतुर्विंशतिपट्टः कारितः प्रतिष्ठितः श्रीसूरिभिः तहरवाडावास्तव्य शुभं भवतु ॥

९७५. सं० १९७१ वर्षे वैशाखशु० ६ सोमे उपकेशवंशे वृद्धशाखायां कर्मदीयागोत्रे सा० देकाभा० देवलदेपु० सा० धीरासा० हीराभा० हीरादेपु० सा० सोनपालभा० पूनी तयोः पुत्रेण मेघराजेन भा० मटकुपु० जइतपालरत्नपालादिपरिवारयुतेन स्वपुण्यार्थं श्रीकुंथु-

नाथबिंबं कारितं प्र० श्रीखरतरगच्छे श्रीजिनहर्षसूरिपट्टालंकारश्रीजिन-
चंद्रसूरिभिः श्रीरस्तु ॥

५७६. सं० १४७२ वर्षे वैशाखवदि ७ शनौ श्रीश्रीमाल-
ज्ञातीयश्रेष्ठिदेदाभार्यापचूपुत्रसंखीमाकेन भार्याखेतलदेसंग्राममुख्यबहु-
पुत्रसहितेन श्रीधर्मनाथबिंब स्वश्रेयोऽर्थं श्रीअंचलगच्छे श्रीगच्छनायक-
श्रीजयकीर्त्तिसूरीणामुपदेशेन कारितं प्रतिष्ठापितं च श्रीभवतु ॥

५७७. सं० १६५६ अलाई ४५ वर्षे वैशाखसित ७ बुधे
स्तंभतीर्थवास्तव्यवृद्धशाखामोढज्ञातीयव० कीकाख्येन भा० वनाईपुत्र
व० काला ठ. लालजी ठ. हीरजी प्रमुखपरिवारयुतेन श्रीनमिनाथबिंबं
स्वयं प्रणामकारापणपूर्वं का० प्र० च भट्टारकश्रीहीरविजयसूरिपट्टा-
लंकारकोटीरहीरश्रीतपागच्छाधिराजभट्टारकश्रीविजयसेनसूरिभिः ॥

५७८. सं० १६८२ व० वै० शु० १ वार पत्तनवास्तव्य
प्रा० वृ० बा० वच्छाई स्वश्रेयसे श्रीवासुपूज्यबिंबं कारितं प्रतिष्ठितं च
श्रीविजयदेवसूरिभिः ॥

५७९. सं० १६२६ व० फागुणशुदि ८ सोमे तपागच्छे
श्रीहीरविजयसूरि..............................कथनातः बा० सखमाई
.............................. ॥

५८०. संवत् १५२९ वर्षे फागुणशुदि २ शुक्रे श्रीश्रीवंशे
रसोईयागोत्रे श्रे० डाहाभार्यारंगाईपुत्रश्रे० देवरसुश्रावकेण भा०
कूयरिभ्रातृसीधरयुतेन श्रीअंचलगच्छेश्वरश्रीजयकेसरिसूरीणामुपदेशेन
स्वश्रेयोऽर्थं श्रीशांतिनाथबिंबं कारितं प्रतिष्ठितं श्रीसंघेन श्रीपत्तननगरे ॥

५८१. संवत् १६४४ वर्षे ज्येष्ठशुदि १२ सोमे श्रीश्रीमाल-
ज्ञातीयपरी० वजिआभा० वहलदेसुतपरी० मेघजीनाम्ना श्रीशांति-

नाथबिंबं कारापितं श्रीतपागच्छे जगद्गुरुश्रीहीरविजयसूरिविजयराज्ये पट्टालंकारश्रीविजयसेनसूरिभिः प्रतिष्ठितं च श्रीरस्तु ॥

५८२. सं० ११६० ज्येष्ठवदि २ सांतिरुद्रेण महावीरमियं (? बिंबं) कारापितं ॥

५८३. संवत् १५३७ वर्षे वैशाखशुदि १० सोमे दिने श्रीगंधारमंदिरे श्रीश्रीमालज्ञातीयठ० सहसाभार्या बाई वाल्हीतायाः पुत्रीबा० अरघूनाम्न्या स्वसृपक्षे सो० गणाभार्यामणकाईपुत्रस्य सा० वसुपाल स्वस्य भर्त्तुः पूजित्ततश्रीसुविधि९जिनबिंबं कारितं प्र० श्रीवृद्धतपापक्षे भट्टा० श्रीश्रीश्रीउदयसागरसूरिभिः ॥

५८४. सं० १५१७ वर्षे ज्येष्ठशुदि ५ गुरु प्राग्वाटज्ञातीय पारिषमादाभार्यामाकूसुतजीवामूलासहितेन आत्मश्रेयोऽर्थं श्रीसुमतिनाथ-जीवितस्वामिबिंबं का० प्र० वृहद्गच्छे सत्यपुरीशाखायां भ० श्रीपासचंद्रसूरिभिः झायणाग्रामे ॥

५८५. संवत् १६२२ वर्षे माघवदि २ बुधे सोनी देवचंद. सोनी भीमजी. बाई मनाई सिद्धचक्रपट्टः कारापितः पूज्यश्रीश्रीश्रीहीर-विजयसूरिप्रतिष्ठितं ॥

५८६. सं० १६८२ व. फा. व० ४ स्तंभतीर्थवास्तव्यगां० कुअरजीना श्रीमुनिसुव्रतबिंबं का० प्र० भ० श्रीविजयाणंदसूरिभिः ॥

५८७. सं० १५२१ व० वैशाखव० ५ ओसवंशे मं० सूरसीभा० हीरूसुतमं० सिंघाभा० धनीसुतश्रीरंग तथा मं० मेघा भा० कपूराई सु० नगराज शिवदास प्र० कुटुंबयु० हीरूसुतया श्रा० लीलाईनाम्न्या निजश्रेयसे श्रीआदिनाथबिंबं का० प्रति० श्रीवृद्धतपापक्षे श्रीरत्नसिंहसूरिपट्टे श्रीउदयवल्लभसूरिभिः स्तंभतीर्थे ॥

५८८. सं० १६९४ मा० व० ९ रवौ श्रीअंचलगच्छे श्रीधर्ममूर्त्तिसूरिसंततीयवंत्रासस० डुंगरकेन श्रीसुपार्श्वबिंबं प्रतिष्ठापि[तं] गंधारप्रतिष्ठायां ॥

५८९. सं० १५१२ वर्षे फा० शु० ५ श्रीमालवंशे छकडियागोत्रे सं० गुणराजभार्याचांपलदेपुत्रसं० देवदत्तश्रावकेण भार्यामाणिकदेपुण्यार्थं पुत्रादिपरिवारयुतेन श्रीश्रेयांसनाथबिंबं कारितं प्रतिष्ठितं च श्रीखरतरगच्छे श्रीजिनभद्रसूरिभिः ॥

## कडाकोटडी, श्रीपद्मप्रभस्वामिजिनालय.

५९०. सं० १५०८ वर्षे श्रीश्रीमालज्ञातीयसा० कालाभार्या कपूरीसुतसा० मालाभार्यावातूश्रेयसे श्रीसुमतिबिंबं कारितं प्रतिष्ठितं वैशाखशु० १२ ॥

५९१. सं० १३९१ वर्षे माहवदि ११ शनौ प्राग्वाटज्ञातीय व्य० डूंगरेण पितामहीबाईगुरदेवीश्रेयोऽर्थं बिंबं कारापितं ॥

५९२. सं० १५६३ वर्षे वै० शु० ६ शनौ श्रीस्तंभतीर्थवा० ऊकेशज्ञा० सो० जिणीआभार्यामाचीसुतसो० जीवाभार्याजीवादें- नाम्न्या पुत्रवच्छासंग्राममेघजीप्र० कुटुंबयुतया श्रीपद्मप्रभबिंबं कारितं प्रतिष्ठितं श्रीतपागच्छे श्रीहेमविमलसूरिभिः श्रेयोऽस्तु ॥

५९३. सं० १५१९ वर्षे कार्त्तिकवदि १ रवौ श्रीश्रीमालज्ञातीयश्रे० भीमासुतश्रे० पाचाभार्या लापूसुतश्रे० आल्हणसीकेन भा० जीविणियुतेन स्वश्रेयसे श्रीवासुपूज्यबिंबं आगमगच्छे श्रीदेवरत्नसूरिगुरूपदेशेन कारितं प्रतिष्ठितं च माणकुलिवास्तव्यः ॥

५९४. सं० १३०१ फा०शुदि ९ श्रीमालज्ञातीयधुवसाम-

नेन खिलूठ० चिलामातृ....त्तश्रेयोऽर्थं चतुर्विंशतिपट्टः कारितः श्रीचंद्रगच्छे श्रीमुनिचंद्रसूरिशिष्यश्रीनेमिचंद्रसूरिभिः प्रतिष्ठितः ॥

५९५. सं० १५२० वर्षे वै० शु० ३ त्रिपुरपाटकवासि प्राग्वाटज्ञा० भीमाभार्याकांऊंपुत्रधूघाकेन भार्यावानूपुत्रधनदत्तझांझणादिकुटुंबयुतेन निजश्रेयसे श्रीतृतीयतीर्थंकरचतुर्विंशतिपट्टः कारितः प्र० तपागच्छे श्रीरत्नशेखरसूरिपट्टे श्रीश्रीश्रीलक्ष्मीसागरसूरिभिः ॥

५९६. संवत् १६४३ वर्षे ज्येष्ठशुदि २ सोमे श्रीप्राग्वाटज्ञातीयसीहाभूतिभार्याभरमादेपुत्रसाहासिहिसकरणभार्याधनादेपुत्रीवाहालबाई प्रेमाईयुतेन स्ववंशश्रेयोऽर्थं श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीमत्तपागच्छाधिराजजगद्गुरुश्री६हीरविजयसूरिपट्टप्रभाकरश्री६विजयसेनसूरिभिः ॥

५९७. सं० १५४४ वर्षे माघशुदि १३ रवौ उपकेशवंशे कर्मदियागोत्रे सा० देवापु०सा० धीराभा०धीरादेपु०सा०सोनपालेन भा० पूतलिपु० सा० मेघराजयुतेन स्वपुण्यार्थं श्रीशीतलनाथबिंबं का० श्रीखरतरगच्छे श्रीजिनसागरसूरिपट्टे श्रीजिनसुंदरसूरिपट्टमंडनजिनहर्षसूरिसद्गुरुभिः ॥

५९८. सं० १६१२ वर्षे पौषशुदि ६ बुधे भावणायगोत्रे आदकरणश्रीअजितनाथप्रति० श्रीचे० सूरि ॥

५९९. सं० १४३२ व० फागु० शुदि २ शुक्रे श्रीश्रीमालज्ञा० पितृरणसी धणसी पुनसी रणसीभा० लूणादेसुतसहजानिमित्तं सुतकुंझाकेन श्रीपद्मप्रभपंचतीर्थी का० प्र० श्रीपूर्णिमापक्षे श्रीरत्नशेखरसूरीणामुपदेशेन ॥

६००. संवत १४७६ वर्षे वैशाखशुदि ५ ऊकेशवंशे सो० गोईद। रजलदेसुतसो० वीसलभार्यासो० वील्हणदेपुत्रेण सो०हरपतिना

भार्याहमीरदेसुतसो० हीरावीरागणपत्यादिकुटुंबसमेतेन निजश्रेयोऽर्थं श्रीअभिनंदनादिचतुर्विंशतिपट्टकः कारितः प्रतिष्ठितः श्रीसूरिभिः ॥

१०१. संवत् १२६३ वर्षे आसाडशुदि १० शनौ महं. चा-(वा)हडश्रावकेण पितृठ० आसपालश्रेयोऽर्थं श्रीपार्श्वनाथप्रतिमा कारिता प्रतिष्ठापिता च ॥

## कडाकोटडी, श्रीशान्तिनाथजिनालय.

१०२. सं० १५२२ वर्षे माहशुदि ९ शनौ प्राग्वाटज्ञातीय श्रे० माईआभार्यामिचूसुतनाथाकेन भा० नामलदेव्या कुटुंबयुतेन स्वश्रेयसे श्रीआदिनाथबिंबं कारितं प्रतिष्ठितं श्रीतपागच्छे श्रीलक्ष्मीसागरसूरिभिः ओडिग्रामे ॥

१०३. सं० १५६३ वर्षे माघशु० ५ सोमे स्तंभतीर्थवा० श्रीश्रीमालज्ञा० सा० कानाभा० लखाई पु० सा० रामाकेन भार्या रत्नाईलघुभ्रातृसा० हरदासविण्णादियुतेन निजश्रेयसे श्रीश्रेयांसबिंबं कारितं प्रतिष्ठितं सर्वसूरिभिः श्रीसुतसंतानवृद्धिरस्तु ॥

१०४. सं० १६३७ माघव० ३ शनौ सा० हंसराजभा० इंद्राणीसु०धनजीना श्रीशीतलनाथः श्रीतपागच्छभ० श्रीहीरविजय-सूरिभिः प्र० ॥

१०५. संवत् १५२५ वर्षे माहशुदि ११ भूमे उकेशवंशे साहूसषागोत्रे साहसउद्रभार्यासोनलदेपुत्रसाहदेवदत्तभार्या रत्नाई तत्पुत्र साहहर्षासहितेन रत्नाईपुण्यार्थं श्रीविमलनाथबिंबं कारितं प्र० श्रीखर-तरगच्छे श्रीजिनसुंदरसूरिपट्टे श्रीजिनहर्षसूरिभिः ॥ शुभं भवतु ॥

१०६. सं० १३९८ वर्षे वैशाखवदि ६ शुक्रे गौर्जरज्ञातीय

महं. सोमाभा० सूरिठश्रेयसे न० पात....ठरूपि श्रा·········तश्रीशांतिः कारितः प्र० श्रीसूरिभिः ॥

६०७. सं० १५५१ वर्षे पौषवदि ९ गुरौ श्रीश्रीमालज्ञा० सा० नागसीभा० जासुसुतसा० वाच्छाभार्यया श्राविकाअमकूनाम्न्या स्वश्रेयसे श्रीअजितनाथजीवितस्वामिबिंबं सद्गुरूणामुपदेशेन कारितं प्रतिष्ठितं च विधिना श्रीस्तंभतीर्थवास्तव्यः श्रीरस्तु ॥

६०८. सं० १५१२ वर्षे आषाढवदि १ श्रीऊकेशवंशे सा० आमूसंताने भ० कर्मासाधूपुत्रसा० वच्छाकेन भार्याहसाईप्रमुखपरिवारसहितेन स्वश्रेयसे श्रीशीतलनाथबिंबं कारितं प्रतिष्ठितं च श्रीखरतरगच्छे श्रीजिनभद्रसूरिभिः ॥

६०९. सं० १२५९ ज्येष्ठशु० १९ थारागच्छे श्रीशांतिसूरिसंतानेऽकारिटावडग्रामे पाजाश्रेयोऽर्थं पौत्रयशश्चंद्रेण श्रीपार्श्वनाथबिंबं कारितं ॥ मः १ ॥

६१०. संवत् १६६७ व० वैशाखमासे कृष्णपक्षे ७ तिथौ भृगुवासरे श्रीस्तंभतीर्थवास्तव्यलघुशाखायां श्रीमालज्ञातौ सा०वछू भा० अछबादेपु० बईलाछि श्रीआगमगच्छे श्रीकलसेन(?)सूरीणामुपदेशेन श्रीशांतिनाथबिंबं कारितं.............................तेपा० श्री.... [हे]मसोमसूरिप्र० ॥

६११. सं० १६६७ वैशाखवदि ७ बुधे श्रीस्तंभतीर्थवास्तव्य ऊकेशज्ञातीयवृद्धशाखायां सा०धर्मसीभा०धर्मादेसुतसा०कर्मसीभार्या सषमादेसुतउदयवंतरहीयायुतेन स्वकुटुंबश्रेयोऽर्थं श्रीआदिनाथबिंबं कारितं तपागच्छे श्रीसोमविमलसूरिपट्टे श्रीहेमसोमसूरिभिः आचार्यश्रीविमलसोमसूरियुतैः प्रतिष्ठितं स्तंभतीर्थे श्रीप्रतिष्ठाकारि श्रा० पाची ॥

६१२. सं० १६२७ वर्षे ज्ये०व० ११ शुक्रे आशापल्ली-

वासि ऊकेशज्ञातीयसं० झांझणभा० झमकूपुत्रसं० जइताभा० झटकूसुत सा० महिपालेन भा० मल्हाईसुतरत्नपालस्वलघुभ्रातृसा० लटूभा० इंद्राणीप्रमुखकुटुंबयुतेन श्रीशीतलनाथबिंबं का० प्र० तपाश्रीसोमसुंदरसूरिशिष्यश्रीलक्ष्मीसागरसूरिभिः ॥

६१३. सं० १४८२ वर्षे फाल्गुनशुदि ३ रवौ प्राग्वाटज्ञातीयसं० व्य० पेथडसंताने व्य० आल्हणसीहभार्याव्य० ऊमादेसुतसंघ० व्य० मंडलिकेन स्वश्रेयसे आगमगच्छे श्रीजयानंदसूरीणामुपदेशेन श्रीश्रीसुमतिनाथबिंबादिपंचतीर्थी कारिता प्रतिष्ठिता श्रीसूरिभिः शुभं भवतु ॥

६१४. सं० १५४७ वर्षे माघशुदि १३ रवौ श्रीमंडपे श्रीमालज्ञातीयसं० कूडाभा० हर्षूपु० सं० खीमाभा० पूजीपु० सं० जगसीभा० माकूपु० सं० गोल्हाभा० सामापु० सं० मेघापुत्रीशाणीलघुभ्रातृसं० राजाभा० सांगूपुत्रसं० जावडेन भा० धनाई जीवादे सत्कादे सुहागदे धनाईपु० सं० हीराभा० रमाईसं० लालादिकुटुंबयुतेन निजश्रेयसे १०४ बिंबकारयित्रा विहरमानश्रीविशालनाथबिंबं कारितं प्रतिष्ठितं श्रीतपागच्छे श्रीसोमसुंदरसूरिश्रीश्रीलक्ष्मीसागरसूरिपट्टे श्रीसुमतिसाधुसूरिभिः ॥

६१५. संवत् १५७९ वर्षे फागुणशुदि ५ सोमे वृद्धशाखायां उसवंशे सा० ठाकरसीभा० पचीपु० वरद हासा वरदभा० जीवणिसु० संग्राम तेजा लहूआ नाईआ गांगा साईआ नरपति हांसाभा० लीलादेसु० आणंद कमलसी भूपति श्रेयोऽर्थं श्रीशीतलनाथबिंबं श्रीआगमगच्छे भट्टा० श्रीशिवकुमारसूरिभिः प्रतिष्ठितं चतुर्विंशतिपट्टे कारितं ॥

६१६. सं० १६२२ वर्षे पौषवदि १ रवौ ओसवालज्ञातीय मडावरागोत्रे सा० धवकरणभार्यासिवादेपुत्रसा० पा....भार्याअमर....पुत्र

सा०श्रीपतिधनपतिसर्वकुटुंबश्रेयोऽर्थं श्रीसंभवनाथबिंबं कारितं प्र० श्रीसोमविमलसूरिविजयराज्ये ॥

## मांडवीपोळ, श्रीआदिनाथजिनालय.

६१७. संवत् १४४७ फाल्गुनशुदि ८ सोमे श्रीमालवंशे ढोरगोत्रे ठ० रतनपु० नरदेवभार्याबा० नाल्हीपु० ठ० धिरियारामकर्मसीहटीलादिभिः श्रीपार्श्वनाथसहिता पंचतीर्थी का०प्र० खरतरगच्छे श्रीजिनमेरुसूरिपट्टे श्रीजिनहितसूरिभिः ॥

६१८. संवत् १५२१ वर्षे ज्येष्ठशुदि ५ शुक्रे श्रीश्रीमालज्ञातीयश्रे० लाषाभार्यालाषणदेसुतहीराभार्याहीरादेश्रेयोऽर्थं सुत—जगमालेन श्रीविमलनाथबिंबं कारितं श्रीपूर्णिमापक्षीयश्रीसाधुरत्नसूरिपट्टे श्रीश्रीसाधुसुंदरसूरीणामुपदेशेन प्रतिष्ठितं विधिना उगाणवास्तव्यः ॥

६१९. संवत् १५१० वर्षे फागु० वदि २ शुक्रे सौराष्ट्रिकज्ञातीयठ० मालाक० सूल्हीसु० श्रे० टाहाक० चनूसु०श्रे०माईयाक०माणिकिदेसुत सधारण एतैः स्वकुटुंबश्रेयोऽर्थं श्रीसुमतिनाथबिंबं कारितं प्रतिष्ठितं आगमगच्छे श्रीसिंहदत्तसूरीणामुपदेशेन विधिना श्रीरस्तु॥

६२०. संवत् १२३४ माहशुदि ५ कंबोचीग्रामे श्रीब्रह्माणगच्छे श्रे० नंदाकेन नाथूभार्यासमेतेन भाःपितृयशोधनस्वश्रेयोऽर्थं श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं च श्रीमहेंद्रसूरिभिः ॥

६२१. संवत १५९५ वर्षे माहशुदि १२ शुक्रे ओसवंशगना-(ज्ञा)तीय आंगोठीवास्तव्य भारज्यारभूसुतराजपालकारयेत श्रीआदिनाथः तपागच्छे श्रीआणंदविमलसूरिभट्टारकश्रीविजयदानसूरिप्रतिष्ठितं सुखकरः॥

६२२. संवत् १२७९ वर्षे वैशाखशुदि..........................

जदेवप.............नामा सुश्रा...............श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीदेवसूरिगच्छे श्रीवयरसेणसूरिभिः ॥

६२३. सं० १३७१........................केन....ज श्रीवासुपूज्यबिंबं कारितं प्र० श्रीविबुधप्रभसूरिभिः ॥

६२४. सं० १४३० माहवदि २ सोमे...........ज.........भ ...............नावलपु०..............भ्रातृधरणापुण्यार्थं पंचतीर्थी का० प्र० श्रीधनदेवसूरिभिः वृहद्गच्छे ॥

६२५. स्वस्ति सं० १५१० वर्षे फागुणवदि २ शुक्रे....... ..........पुत्रेण सा० सगरेण भा० वा० लाडूसुतसा० गदा वीकागोरा प्रमुखस्वकुटुंबश्रेयोऽर्थं श्रीअभिनंदनबिंबं कारितं प्रतिष्ठितं श्रीवृद्धतपापक्षे भ० श्रीविजयतिलकसूरिपट्टे भ० श्रीविजयधर्मसूरिवरैः शुभम् ॥

६२६. सं० १६८१ वर्षे फा० शु० १० कडूआमतीगच्छे सो। अमीआसुत सो। रतन श्रीपार्श्वनाथबिंबं प्रतिष्ठापितं सुश्रावकेण सा। श्री तेजपालेन प्रतिष्ठितं ॥

६२७. सं० १२८१ वैशाखशुदि ३ शनौ पितामहश्रे० साम्बपितृश्रे० जसवीर मातृलाषू एतेषां श्रेयोऽर्थं सुतगांधि गोसलेन बिंबं कारितं प्रतिष्ठितं च श्रीचंद्रप्रभसूरिशिष्यैः श्रीजिनेश्वरसूरिभिः ॥

६२८. सं० १४९१ वर्षे माघवदि १० सोमे श्रीश्रीमालज्ञातीय श्रे० लूणाभा० लक्ष्मादे पितृमातृश्रेयसे पितृव्यमोकलसूहडा गोरा हीरा भ्रा० नरबदाश्रेयसे नरपालषोनाभ्यां श्रीश्रेयांसनाथचतुर्विंशतिपट्टः कारापितः प्र० पिप्पलगच्छे भ० श्रीसोमचंद्रसूरिपट्टे श्रीश्रीउदयदेवसूरिभिः श्रीशुभं भवतु ॥

६२९. सं० १५०३ वर्षे माघव० ६ वीरमग्रामवासिप्राग्वाट-

न्य० हेमाभा० रुदीपुत्रन्य० नरबदभ्रातृवाच्छाकेन भार्याशाणीपुत्र-धनानगराजादिकुटुंबयुतेन श्रीसंभवनाथबिंबं का० प्र० तपाश्रीसोम-सुंदरसूरिशिष्यश्रीजयचंद्रसूरिभिः ॥

६३०. संवत् १६१२ वर्षे वैशाखशुदि ६ बुधे श्रीश्रीमाली-ज्ञातीयवृद्धशाखायां स्तंभतीर्थे सा० समधरण भार्या टाकूसुतसा०.... ....वुढाभा० सोनाई...............श्रेयसे श्रीआदिनाथबिंबं कारितं श्रीविजयदानसूरिभिः प्रतिष्ठितं ॥

## मांडवीपोळ, श्रीनेमनाथजिनालय.

६३१. संवत् १४३९ वर्षे पौषवदि ८ रवौ प्राग्वाटज्ञातीय चिवश्रयेसहे भा० माणिकिदेपु० हाबाभार्या जीणीपु० चांपा सांगा न्य० हावांकेन मातृपित्रोः श्रेयसे श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीज-याणंदसूरिभिः ॥

६३२. संवत् १५१६ वर्षे माहवदि ८ सोमे ओसवालज्ञातीय सा० माकडभा० माल्हणदे द्वि० भा० मेलादे पितृमातृभ्रातृनयणश्रेयसे सु० नाथाकेन भा० धनीपु० पदनापोमायुतेन श्रीश्रेयांसनाथबिंबं का० पूनिमपक्षे भीमपल्लीयभ० श्रीपासचंद्रसूरिपट्टे भ० श्रीजयचंद्रसूरीणामु-पदेशेन प्रतिष्ठितं ॥

६३३. सं० १५२१ वर्षे माघशुदि १३ प्राग्वाटज्ञा० सं० हापाभा० हांसलदेसुतसं० नासणभा० नागलदेपुत्रसं० नारदेन भा० कर्माईप्र० कु० निजश्रेयोऽर्थं श्रीसुमतिनाथबिंबं का० प्र० तपागच्छे श्रीसोमसूरिसंताने श्रीरत्नशेखरसूरिपट्टे श्रीलक्ष्मीसागरसूरिश्रीसोमदेव-सूरिभिः अहम्मदावादे ॥

६३४. संवत् १५५६ वर्षे वै० शु० ३ आमलेश्वरवास्तव्य-

लाडूआश्रीमालीज्ञातीयश्रे० भादाभा० मोलीसु० श्रे० देपालकेन भा० जीवासु० श्रे० ठाईआ वीराहीरामहीआदिस्वकुटुंबश्रेयोऽर्थं श्रीविमलनाथबिंबं का० प्र० श्रीहेमविमलसूरिभिः श्री ॥

६३५. सं० १४३२ फा० शुदि २ शुक्रे उपकेशज्ञातौ चेचटगोत्रे वेशटशाखायां सं० देसलसंताने सं० समरसिंहसु० सा० डुंगरसिंह भा० डूलहदेव्या सु० समरसिंहश्रे० श्रीआदिनाथबिंबं का० प्र० ककुदाचार्यसंताने श्रीदेवगुप्तसूरिभिः ॥

६३६. सं० १३८० माघशुदि ६ सोमे श्रीभावडारगच्छे उकेशज्ञातीयश्रे० कालूभार्याचांचीसुतेन भ्रातृझांझणलालतीडाकालश्रेयसे मातृपित्रोश्च श्रीशांतिनाथप्रभृतिपंचतीर्थी सा० घांगाकेन कारिता प्रतिष्ठिता श्रीजिनदेवसूरिभिः ॥

## मांडवीपोळ, श्रीमुनिसुव्रतस्वामिजिनालय.

६३७. संवत् १५१२ फागुणशुदि ८ शनौ श्रीमालज्ञातीय मं० नरूआभार्यावाछीपुत्रकूरणा मं०..जणसीप्रमुखस्वकुटुंबसहितेन मं० पेथासुश्रावकेण भार्या वीरूसंजितेन च निजश्रेयसे श्रीअंचलगच्छे श्रीजयकेसरिसूरीणामुपदेशेन श्रीश्रेयांसनाथबिंबं कारितं प्रतिष्ठितं संघेन ॥

६३८. संवत् १५५७ वर्षे ज्येष्ठशुदि ३ गुरौ श्रीस्तंभतीर्थे श्रीगूर्जरवंशे मं० वदाभा० राणीपुत्रमं० महिराजभार्यासंपूरीपु० मं० वंकासुश्रावकेण भा०हीराईलघुभ्रातृमंत्रिसहसाभा० सहजलदेप्रमुखसमस्तकुटुंबसहितेन स्वश्रेयसे श्रीमदंचलगच्छेशश्रीसिद्धांतसागरसूरीणामुपदेशेन श्रीसुविधिनाथबिंबं कारितं प्रतिष्ठितं श्रीसंघेन ॥

६३९. संवत् १६०४ वर्षे वैशाखवदि ७ सोमे श्रीस्तंभतीर्थे

ओसवालज्ञातीयवृद्धशाखायां से० कर्माभार्याकरमादे श्रीमुनिसुव्रतस्वामि प्रतिष्ठितं श्रीवृद्धतपापक्षे श्रीअमररत्नसूरिभिः ॥

## मांडवीपोळ, श्रीकुंथुनाथजिनालय.

६४०. संव० १५०६ वर्षे वै० शुदि प्राग्वाटज्ञातीयव्य० विरुआभार्यावीझूसुतव्य० नरसिंहेन स्वश्रेयसे श्रीवीरबिंबं का० प्र० तपाग० श्रीरत्नशेखरसूरिभिः ॥

६४१. सं० १४२० वैशाखशुदि १० शुक्रे उपकेशज्ञातीय ....................पितृमातृपूर्वज....................श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीहेमसूरिसंताने श्रीहरिभद्रसूरिभिः ॥

६४२. संवत् १६६७ वर्षे वैशाखवदि ७ बुधे श्रीस्तंभतीर्थवास्तव्य ऊकेशज्ञातीयसा० कर्मसीभा० सषमादे स्वकुटुंबश्रेयसे श्रीसुपार्श्वनाथबिंबं कारितं तपागच्छे श्रीसोमविमलसूरिपट्टधारिश्रीहेमसोमसूरिभिः आचार्यश्रीविमलसोमसूरियुतैः प्रति० स्थंभतीर्थे प्रतिष्ठाकारि श्रा० पांचीकेन ॥

६४३. सं० १५२९ वर्षे वैशाखशुदि ५ शुक्रे श्रीश्रीमालिज्ञातीयसा० पूंजाभार्यालीलूसुतसा० सूंटाकेन भा० रानाईसुतनाथाचांदादिकुटुंबयुतेन स्वश्रेयसे रत्नमयश्रीपार्श्वनाथबिंबे परिकरः श्रीआगमगच्छेशश्रीदेवरत्नसूरीणामुपदेशेन कारितः प्रतिष्ठापितश्च श्रीस्तंभतीर्थवास्तव्यः ॥

६४४. संवत् १४७४ वर्षे ज्ये० व० ११ रवौ डीसावालज्ञातीयमं० नरसीभा० सुहवदेसुतमं० दूदाकेन भार्याफदीभोलीसुतलाषागोवनादिकुटुंबयुतेन स्वश्रेयोऽर्थं श्रीविमलनाथबिंबं कारितं प्रतिष्ठितं तपापक्षे श्रीसोमसुंदरसूरिभिः ॥

६४५. संवत् १५१८ वर्षे पोसवदि १३ भूमे श्रीमालज्ञा० रम्यकगोत्रे मंत्रिधर्मसीभा० रूपणिसुत राणउ परबत फालु परवत-भा० वाल्हीसुतपोपट .गोपउ फालाभा० पूरीसु० कानउविजउसहिज्ञा-सहितेन पूर्व० श्रेयो० श्रीशीतलनाथबिंबं का० प्र० श्रीचैत्रगच्छे चांद्र-संमी भ० श्रीमलयचंद्रसूरिपट्टे श्रीलक्ष्मीसागरसूरिभिः पानसीशा........॥

६४६. सं० १३८६ वर्षे वैशाखशुदि १३ सा० अरसीभा० धानीपु० हरदेवभा० हीरलपु० सांगण वीनाराजडसाहडकरमणलूणा-सांग....पु० वीसल सकुटुंवेन भ्रातृलाषणश्रेयोऽर्थं श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीसूरिभिः ॥

६४७. सं० १५१० वर्षे ज्येष्ठशुदि २ गुरौ श्रीश्रीमालज्ञा-तीयठ० वउलासु० ठ० छाडासु०पाताभा०साधूसु०भीमाभा० रूपाईनाम्न्यां स्वश्रेयोऽर्थं जीवितस्वामिश्रीशीतलनाथादिजिनचतुर्विंश-तिपट्टः श्रीपूर्णिमापक्षे सद्गुरूणामुपदेशेन कारितः प्रतिष्ठितश्च विधिना श्रीस्तंभतीर्थे श्रीर्भूयात् ॥

६४८. संवत् १७०६ वर्षे ज्येष्ठशुदि १३ रवौ श्रीस्तंभतीर्थ-वास्तव्यश्रीश्रीमालीज्ञातीयवृद्धशाखायां सा० हीरासुतसा० सेसकरण-केन श्रीआदिनाथबिंबं कारितं प्रतिष्ठितं त० श्रीविजयाणंदसूरिराजआ० श्रीविजयराजसूरिभिः ॥

## कुंभारवाडो, श्रीशीतलनाथजिनालय.

६४९. संवत् १६६७ वर्षे वैशाखमासे कृष्णपक्षे ७ तिथौ भृगुवासरे श्रीस्तंभतीर्थवास्तव्यलघुशाखायां श्रीश्रीमालज्ञातीयवल्लू तत् भार्या बाईपाचाई....सु० बबादे तत्सुतसा० यजलवंतभा० मोहणदेसुतरिष-

भदास आगमगच्छे भट्टारकश्रीकुलवर्द्धनसूरीणामुपदेशेन श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं च विधिना चिरं नंदतु शुभं ॥

६५०. सं० १४०८ वर्षे वैशाखशुदि ९ गुरौ पल्लीवालज्ञातीय पितृश्रे० श्रीखेताश्रेयोऽर्थं मातृआल्हूपुण्यार्थं सुतसमेतेन श्रीशांतिनाथबिंबं कारितं प्रतिष्ठितं श्रीचैत्रगच्छे श्रीपद्मदेवसूरिपट्टे श्रीमानदेवसूरिभिः ॥

६५१. संवत् १६०४ वर्षे वैशाखवदि ७ सोमे बटका ४ श्रीश्रीमालज्ञातीयदो० वजिकरणभार्याबा० हांसलदेनाम्न्या परतमा श्रीसुमतिनाथ श्रीविजयदानसूरिप्रतिष्ठितं ॥

६५२. संवत् १४९६ वर्षे ज्येष्ठशुदि ७ सोमे श्रीमालज्ञातीय पिताकडूआभा० लषमादेसुत माकड भूंभा तेऊ पितृमातृश्रेयसे श्रीवासुपूज्यबिंबं प्रतिष्ठितं नागेंद्रगच्छे श्रीरत्न[सूरिभिः] ॥

६५३. संवत् १४........वर्षे फागुणशुदि २....प्राग्वाटज्ञातीय ................तेजपाल श्रे०................घर पितृश्रेयसे सुतपूजाकेन श्रीसंभवनाथ का० नागेंद्रगच्छे प्रतिष्ठितं श्रीगुणाकरसूरिभिः ॥

६५४. सं० १५९३ वर्षे माघशुदि ५ रवौ प्रा० श्रे० पाताभार्यासुहामणिसुतगोगनेन भार्यामनकाईसुतवीपाफताल्कादिकुटुंबयुतेन पितृश्रेयसे श्रीपार्श्वबिंबं का० प्र० तपागच्छाधिराजश्रीहेमविमलसूरिभिः ॥

६५५. सं० १३४३ माघशुदि १२ पल्लीवालज्ञातीयसंघ० हरिचंदसुतसंघ. तेजपालेन मातापाल्हणदेव्या श्रेयोऽर्थं श्रीपार्श्वनाथबिंबं रत्नमयं कारापितं ॥

६५६. सं० १६११ व० ज्येष्ठशु० १२ शनौ ओ० ज्ञा० सा० हेमा सं० सा० सिघराजेन श्रीसुपार्श्वबिंबं कारितं श्रीकोरंटगच्छे श्रीनन्नसूरिभिः प्रति० ॥

६५७. संवत् १७६५ व॰फा॰शु॰ ५ गुरौ श्रीस्तंभतीर्थवास्तव्यसा॰चिदकिरणभा॰ कपूरबाईसुतसा॰ जयकरणकेन स्वद्रव्येण भावीजिनश्रीपेढालनाथबिंबं कारि॰ प्रति॰ तपागच्छे संविज्ञपक्षे भ॰ श्रीज्ञानविमलसूरिभिः ॥

## शेरडीवाळानी पोळ, श्रीसुविधिनाथजिनालय.

६५८. सं. १५६५ वर्षे वैशाखव॰ ३ रवौ श्रीश्रीमालज्ञातीय लघुशाखायां सं॰विरूया भा॰ककूसुयमाणिकभा॰ पूतलि मं॰मेघराजभा॰मयगलदेअजाईसा॰श्रीराजभा॰सहिजलदे तत्सु॰ सं॰रामसा हर्षा आमराज अजयराजप्रभृतिसमस्तकुटुंबश्रेयोऽर्थं मं॰ मेघराजेन श्रीसुविधिनाथचतुर्विंशतिपट्टबिंबं कारितं प्रतिष्ठितं श्रीवृद्धतपापक्षे भ॰ पूज्यश्रीविजयरत्नसूरिपट्टे भ॰ श्रीधर्मरत्नसूरिभिः ॥

६५९. संवत् १४९० वर्षे वैशाखव॰ ७ ऊकेशवंशीयम॰ धरणिगभार्यानामलदेसुतमहणसीभा॰ महणदेसुतम॰आबाकेन भ्रातृलीबाकेन भ्रातृजमंदिरमेघादियुतेन स्वश्रेयसे श्रीविमलनाथबिंबं कारितं प्रतिष्ठितं श्रीतपागच्छनायकश्रीसोमसुंदरसूरिभिः श्रेयोऽस्तु ॥

## दंताळ पोळ, श्रीशान्तिनाथजिनालय.

६६०. सं॰ १५४४ वर्षे श्रीश्रीमालज्ञातीयसा॰ धनाभा॰ मरगदिपुत्रसा॰ देवाकेन भा॰पूरीपुत्रषीमाशाणादिकुटुंबयु॰ पुत्रवइजाश्रेयोऽर्थं श्रीविमलनाथबिंबं का॰ प्रति॰ श्रीसूरिभिः ॥

६६१. संवत् १५७५ वर्षे माहवदि १ शनौ श्रीमालज्ञातीयम॰ गांगाभार्यानाथीसुतहर्षारूडाश्रीपालहर्षाकेन कलत्रपुत्रादिकुटुंबयुतेन श्रीकुंथुनाथबिंबं कारितं श्रीपू॰श्री५लब्धिसुंदरसूरीणामुपदेशेन प्रतिष्ठितं विधिना वडुद्रवास्तव्यः ॥

६६२. संवत् १५८४ वर्षे चैत्रवदि ५ गुरौ वीसलनगरवास्तव्य-नागरज्ञातीयछालीयाणगोत्रे श्रे०राजाभा० राजलदेपु०श्रीगोइआकेन भा०कूंअरिस० सीपामांगाप्रमुखपरिवारयुतेन श्रीआदिनाथबिंबं कारितं. प्रतिष्ठितं विधिपक्षे श्रीगुणनिधानसूरिभिः ॥

६६३. संवत् १५३१ वैशाखशुदि ५ सोमे श्रीवायडज्ञातीय व्यव० कान्हडभा० सहजलदेपुत्रकर्मणभार्या खेतूपु० नगराजमहिराज जावडनगराजेन भा० रंगीपु० धनादियुतेन स्वश्रेयसे श्रीमुनिसुव्रतबिंबं कारितं श्रीकोरंटगच्छे श्रीसर्वदेवसूरिभिः प्रतिष्ठितं ॥

६६४. सं० १५४२ वै० शु० १३ ऊकेशसा० देवाभा० कउतिगदेपु० कान्हाकेन महिराजसमरामणोरभा०रंगाइसोभागिणि चंगाईसोभागिणि चंगाईमल्हाईपु० वांदाकीका चांपा सहसराजादिकुटुंबयुतेन श्रीपार्श्वनाथबिंबं का०प्र० तपागच्छे श्रीलक्ष्मीसागरसूरिराजैः चंपकनेरवासि ॥

६६५. सं० १५४९ वर्षे ज्ये०शु० ९ सोमे श्रीश्रीमालीय बोरसिद्धित्रा० सो० गोविंदभार्यारूपाईसुतसो० गांगाकेन भार्या लखाईसुतानदुश्रेयसे श्रीश्रेयांसबिंबं का० प्रतिष्ठितं श्रीपूर्णिमापक्षे श्रीगुणरत्नसूरिभिः ॥

## श्रीकुंथुनाथजिनालय.

६६६. सं० १५२० वर्षे आषाढशुदि ९ गुरौ श्रीश्रीमालज्ञा० कोरंटीआश्रे० अमराभा० लाछूसुतकडूआकेन भा०कउतिगदेप्रमुखकुटुंबयुतेन पितृश्रेयसे श्रीमुनिसुव्रतस्वाम्यादिपंचतीर्थी आगमगच्छे श्रीहेमरत्नसूरीणामुपदेशेन कारिता प्रतिष्ठिता च विधिना राणपुरवास्तव्यः श्रीः॥

६६७. संवत् १५६७ वर्षे माघशुदि ५ गुरौ श्रीश्रीवंशे सा०

महिराजभा० माल्हणदेपु०सा० श्रीराजभा० देमाई पु०मेघाकेन भा० रमादे भ्रातृसा० रत्ना सा० रींडा सा० लालावाघावछाप्रमुखस्वकुटुंबस-हितेन स्वश्रेयसे श्रीअंचलगच्छेशश्रीभावसागरसूरीणामुपदेशेन श्रीश्री-शीतलनाथबिंबं कारितं प्रतिष्ठितं श्रीसंघेन श्रीअहम्मदावादनगरे ॥

६६८. संवत् १६३२ वर्षे माघशुदि १० बुधे मोढज्ञातीय ठकरजागाभार्याबाईठकराणीपुत्रीबाईहीराईनाम्न्या श्रीशांतिनाथमूलनायक-चतुर्विंशतिपट्टः कारापितः श्रीस्तंभतीर्थे तपागच्छे श्रीहीरविजयसूरिभिः प्रतिष्ठितः स्वहस्तेन श्रीश्रीसंघेन महतादरेण श्रीसंघस्य भद्रं भवतु ॥

६६९. सं. १२२८ ज्ये......श्रीश्रीमालज्ञा०श्रे० लषमा-भा० साधुसु० महिराजभा० पूरीपु० झांझणभार्यापदमाईदेव्या आत्म-श्रेयसे श्रीमुनिसुव्रतादिपंचतीर्थी कारापिता श्रीसाधुसुंदरसूरीणामुपदेशेन धंधूकावास्तव्यः ॥

## ऊंडीपोळ, श्रीशान्तिनाथजिनालय.

६७०. स्वस्ति संवत् १५११ वर्षे माघशुदि ५ गुरौ श्रीगूर्जर-ज्ञातीयडूंगरीआगोत्रे सा० समधरभा० वाई पांचू तयोः पुत्रेण सा० सालिगनाम्ना स्वकुटुंबश्रेयोऽर्थं श्रीआदिनाथबिंबं कारापितं प्रतिष्ठितं श्रीसूरिभिः ॥

६७१. संवत् १५०९ वर्षे ज्येष्ठवदि ९ शुक्रे श्रीकोरंटगच्छे श्रीनन्नाचार्यसंताने श्रीउपकेशवंशे सौगंधिकसाहधणसीपु० साह पाल्हाभार्या पाल्हणदेपु० लींबाभा० रंगाईपुत्रसाहमाणिक्नाम्ना सुश्रावकेण आत्मपुण्यार्थं श्रीवासुपूज्यमूलनायकयुतश्चतुर्विंशतितीर्थंकर-पट्टः कारापितः प्रतिष्ठितः पूज्यश्रीकक्कसूरिपट्टे श्रीश्रीश्रीसावदेवसूरिभिः साहमाणिकभार्याहर्षाईपुत्रप्राप्तिर्भवतु ॥

६७२. संवत् १५२८ वर्षे चैत्रवदि १० गुरौ श्रीवीरवंशे श्रे० मांडणभार्याजयतूपुत्रश्रे० कुंपासुश्रावकेण भा० मनीपुत्रकीकाभ्रा० देवसीसहितेन स्वश्रेयोऽर्थं श्रीअंचलगच्छाधीश्वरश्रीजयकेसरिसूरीणामुपदेशेन श्रीनेमिनाथबिंबं कारितं प्रतिष्ठितं श्रीसंघेन ॥

६७३. संवत् १५९१ वर्षे वैशाखव० ६ शुक्रे श्रीगंधारवास्तव्यश्रीप्राग्वाटज्ञातीयव्य० कान्हाभा० पोषीमेलादेसु० व्य० वस्तुपालेन भा० वल्हादे प्रमुखकुटुंबयुतेन श्रीवासुपूज्यबिंबं श्रीआगमगच्छे श्रीसंयमरत्नसूरीणामुपदेशतः कारितं प्रतिष्ठितं पूज्यमानं चिरं नंदतु श्रीरस्तु ॥

६७४. संवत् १५४९ वर्षे आषाढशुदि २ शनौ बोरसिद्धिवास्तव्यश्रीश्रीमालज्ञातीयठ० पासाभार्याराजूसुतठ० हरपतिश्रेयोऽर्थं ठ० सिंहाकेन श्रीपार्श्वनाथबिंबं कारितं प्रतिष्ठितं श्रीवृद्धतपापक्षे श्रीश्रीश्रीउदयसागरसूरिभिः ॥

६७५. सं० १५८४ वर्षे वै० शुदि ८ रवौ श्रीश्रीमालीज्ञा० सा० डुंगरभा० कुंतुसुतसा० हीराकेन भा० राजूसुतसा० हांसासा० पासवीरसा० भोजासु० मेघासिंघराजादिपुत्रपौत्रादिपरिवारयुतेन निजश्रेयसे श्रीशांतिनाथबिंबं का० प्र० तपागच्छनायकश्रीहेमविमलसूरिभिः ॥

६७६. सं० १५२९ वर्षे ज्येष्ठशुदि ३ रवौ श्रीश्रीमालीज्ञा० सं०, देवांभा० चांपूसुतसा० लूणाकेन भार्या सुहगीसुतमांडणसदादिकुटुंबयुतेन स्वश्रेयोऽर्थं श्रीमुनिसुव्रतबिंबं कारितं प्रति० श्रीसूरिभिः शुभं भवतु ॥

६७७. सं० १५३२ वैशाखशु० ३ प्रा० श्रे० हेमाभा० दूबीपु० शिवाकेन वृद्धभ्रा० पुंजादिकुटुंबयुतेन स्वश्रेयोऽर्थं श्रीअभिनंदनबिंबं का० प्रतिष्ठितं तपाश्रीलक्ष्मीसागरसूरिभिः ॥

६७८. संवत् १५५१ वर्षे वैशाखशुदि १३ गुरौ श्रीओएसवंशे वागडीआशाखायां सा० साजणभार्यासुहडादेसुतसा० वयजासुश्रावकेण भार्यापदमाईसुतसा० श्रीपतिवृद्धभ्रातृसा० सहिजासहितेन श्रीअंचलगच्छेशश्रीसिद्धांतसागरसूरीणामुपदेशेन श्रीसंभवनाथबिंबं कारितं प्रतिष्ठितं श्रीसंघेन श्रीर्भूयात् श्रीस्तंभतीर्थनगरे ॥

६७९. संवत् १६१७ वर्षे पौषव० १ गुरौ बोरसिद्धिवास्तव्यश्रीश्रीमालज्ञातीयसा० हापाभार्याकुमाईपुत्र जयवंतनाम्ना श्रीपद्मप्रभ का० प्रतिष्ठितं तपाश्रीश्रीश्रीहीरविजयसूरिभिः ॥

६८०. सं० १५६४ वर्षे ज्ये० शु० १२ शुक्रे श्रीओसवंशे सा० श्रीथावरभा० पूनाईसुतजयवंत....वतक श्रीपार्श्वबिंबं का० प्र० श्रीलब्धिसागरसूरिभिः ॥

## दंताळवाडो, श्रीशान्तिनाथजिनालय.

६८१. संवत् १५२१ वर्षे वैशाखशुदि ६ बुधे श्रीप्राग्वाटवंशे लघुसंताने श्रे० भरमाभा० छालीपुत्रदीनानाम्ना जीवासुश्रावकेण भा० कूंअरिभ्रातृसदाचांदाचांगासहितेन निजश्रेयोऽर्थं श्रीअंचलगच्छेश्वरश्रीजयकेसरिसूरीणामुपदेशेन श्रीसंभवनाथबिंबं कारितं प्रतिष्ठितं श्रीसंघेन ॥

६८२. संवत् १५०७ वर्षे माघशु० १३ शुक्रे श्रीश्रीमालज्ञातीयश्रे० कर्म्मसीभार्याकर्मादेसुतकालाभा० फदूसुतधनाकेन भा० हीमतिभ्रातृवडूआयुतेन पितृमातृश्रेयोऽर्थं श्रीअभिनंदनस्वामिबिंबं कारितं श्रीआगमगच्छे श्रीहेमरत्नसूरिगुरूपदेशेन प्रतिष्ठितं श्रीपत्तनवास्तव्य शुभं भवतु ॥

६८३. संवत् १५८७ वर्षे वैशाखवदि ७ सोमे श्रीश्रीवंशे दो० जणीयाभार्याजसमाई पु० दो० षेताभा० पीमाईपु० दो०

